# बालसंस्कृतम्

युगाब्दः ५१२०, माघमासः, फरवरी–२०१९ प्रथमाङ्कः

**मार्गदर्शकौ**

डा० वाचस्पतिमिश्रः (अध्यक्षः)

शोभनलाल–उकिलः (उपाध्यक्षः)

उत्तरप्रदेशसंस्कृतसंस्थानम्

**प्रकाशकः**

श्री हरिबख्शसिंहः

निदेशकः, उत्तरप्रदेशसंस्कृतसंस्थानम्

**सम्पादकः**

सुधिष्ठकुमारमिश्रः

**प्रबन्धसम्पादकः**

दिनेशकुमारमिश्रः

**प्रबन्धनगणः**

सुशीलकुमारः, विशालप्रसादः,

नेपालदासः, अंशुगुप्ता

**सम्पर्कसङ्केतः**

उत्तरप्रदेशसंस्कृतसंस्थानम्

नव–हैदराबाद, लखनऊ–२२६००७

ईमेल : balasamskritam@gmail.com

**मुद्रकः**

शिवम् आर्ट्स

512/569, दूसरी गली, लखनऊ–२२६००७

ईमेल : shivamarts.lko@gmail.com


## पत्रिकाविषये किञ्चित्

**अयि बालमित्राणि**

**सादरं वन्दनानि।**

कथा–क्रीडा–गीत–विनोद–उत्सव–चित्रनिर्माण –इत्यादिसमये कस्य बालस्य आनन्दः न भवति ? अतः तादृशाः बालोपकारकाः, ज्ञानवर्धकाः, मनोरञ्जकाः च विषयाः संस्कृतभाषया अत्र सङ्गृहीताः सन्ति।

सर्वस्य बालहृदयस्य संस्कृतस्पन्दनं, स्वस्य नित्य–दैनन्दिन–जीवने संस्कृतवार्तालापः, सरलतया, सहजतया च संस्कृतभाषामाध्यमेन स्वविचारस्य प्रकटनं, न केवलं अभिव्यक्तिकौशलस्य अपितु सर्वविधः विकासः च भवतु, अतः एषा 'बालसंस्कृतम्' नाम्नी एषा पत्रिका प्रस्तुता। बालस्य इच्छा, प्रवृत्तिः, संस्कृतभाषासामर्थ्यम्– इत्यादीनां बालमनो–वैज्ञानिकानाम् अंशानां दृष्ट्या लखनऊस्थेन उत्तरप्रदेशसंस्कृतसंस्थानेन अस्याः बालपत्रिकायाः रचना कृता अस्ति।

बहूनाम् अनुभवानां प्रयोगाणां च आधारेण अत्र प्रेरकः लेखः, चित्रसहिता कथा, क्रीडा, गीतम्, हास्यम्, प्रश्नोत्तरम्, संस्कृतवार्तालापः, सरलसंस्कृतवाक्यानां सङ्ग्रहः – इत्यादयः विषयरूपेण सुचिन्तिताः।

संस्कृमाध्यमेन अनेकप्रकारकाणां विषयानां प्रत्येकं बालस्य ग्रहणस्य, अभिव्यक्तेः च अभ्यासः भवतु। यदा एतेन प्रकारेण बाल्यावस्थायाम् एव संस्कृत – पठनस्य, अध्ययनस्य वा अभ्यासः भवति तदा अग्रे विभिन्न–अवस्थासु अपि संस्कृतं सर्वत्र, सर्वदा च प्रतिष्ठापितम् अवश्यं भविष्यति इति दृढः विश्वासः अस्ति बहूनां जनानाम्। अतः आगच्छाम, पठाम, गायाम, हसाम, नन्दाम.......... ।

– सम्पादकः

# अनुक्रमणिका

## गीतं गायाम



## क्रीडां करवाम



## लेखाः



## कथां पठाम



## एहि हसाम



## पूर्वजानां सुचरितं सुविज्ञानं च



## भारतीयलोकव्यवहारं पश्याम



## सरलसंस्कृतं भाषामहै



## प्रश्नोत्तरी

# समयः एव जीवनम्

कश्चन बालकः अस्ति। सः अत्यन्तम् अलसः। सः समयपालनं न करोति। प्रतिदिनं विद्यालय–गमन–समये तस्य बिलम्बः भवति। एकत्र उद्यानम् अस्ति। सः बालकः तत्र गच्छति। उद्याने काकः अस्ति। सः काकं वदति – 'भोः काक ! आगच्छतु। मया सह क्रीडतु' इति। तदा काकः वदति 'मम समीपे क्रीडार्थं समयः नास्ति' इति। अनन्तरं सः एकं शुकं पश्यति। बालकः शुकं पृच्छति – 'भवान् मया सह क्रीडति किम्' ? शुकः अपि वदति 'यत् मम समयः नास्ति'। अनन्तरं सः बालकः एकां पिपीलिकां वदति – 'त्वं मया सह क्रीड' इति। सा अपि वदति यत् 'मम समयः नास्ति' इति। यदा बालकः सर्वं शृणोति तदा तस्य अतीव लज्जा भवति। ''सर्वे स्व–स्वकार्ये सर्वदा संलग्नाः भवन्ति, समयपालनम् अपि कुर्वन्ति'' इति बालकः जानाति। अनन्तरं बालकः अपि सर्वदा समयेन विद्यालयं गच्छति। सम्यक् पठति च।

**नेपालदासः**
हुगली, पश्चिमबङ्गः

## सिंहः विद्यालयं न गच्छति

**पुत्रः विद्यालयगमनसमये रोदनं करोति। तदा पिता पुत्रं वदति – ''भोः पुत्र ! सिंहस्य पुत्रः रोदनं न करोति अतः भवान् अपि रोदनं न करोतु।'' इति। तदा पुत्रः वदति – सिंहस्य पुत्रः विद्यालयम् अपि न गच्छति।**

# ॥ मूर्खसङ्गति विनाशाय च ॥

एकत्र जलाशयः अस्ति। तत्र कश्चन मण्डूकः वसति। तस्य कोऽपि मित्रं नास्ति। अतः एव सः अत्यन्तं दुःखी भवति। सः सर्वदा ईश्वरं वदति यत् कृपया कमपि मित्रं प्रेषयतु। येन मम सुःखम्, आनन्दः च भविष्यति। तत्र जलाशयस्य समीपे एव एकस्य वृक्षस्य अधः एकं बिलम् अस्ति। तत्र मूषकः वसति। सः मूषकः बहु हसन्मुखः अस्ति। एकदा सः मण्डूकं पश्यति। तस्य समीपं गच्छति, वदति च – भोः मित्र! भवान् कथम् अस्ति ? मण्डूकः मन्दस्वरेण वदति – अहम् एकाकी अस्मि। मम कोऽपि मित्रं नास्ति। अतः अहं दुःखी अस्मि। अनन्तरं मूषकः वदति – भवान् दुःखी मा भवतु। अहं अस्मि खलु ? अहं भवतः मित्रं भविष्यामि। यदा भवान् समययापनम् इच्छति तदा मम समीपम् आगच्छतु। एवं मूषकस्य वचनस्य श्रवणानन्तरं मण्डूकः बहुः प्रसन्नः भवति। तदनन्तरं उभौ अपि घनिष्ठे मित्रे भवतः। द्वौ अपि जलाशयस्य तटे सुखपूर्वकं बहुकालं यावत् क्रीडतः। अधुना मण्डूकः सर्वदा प्रसन्नः भवति।

एकदा मण्डूकस्य मनसि कश्चन उपायः स्फुरति। सः मूषकं वदति – "किमर्थं न आवाम् आवयोः पादयोः रज्जुबन्धनं कुर्वः ? यदा अहं भवन्तं स्मरिष्यामि तदा रज्ज्वोः कर्षणं करिष्यामि। येन भवतः ज्ञानं भविष्यति। यत् अहं भवतः स्मरणं करोमि। एवमेव भवान् अपि करोतु" इति। मूषकः तस्य उपायम् अङ्गीकरोति। तौ एकां रज्जुम् आनीय स्व–स्व पादस्य बन्धनं कुरुतः। आकाशे डयामानः श्येनः एतत् सर्वं पश्यति। सः मण्डूकस्य भक्षणार्थं तस्य उपरि आक्रमणं करोति। तद् यदा मण्डूकः पश्यति तदा सः भीतः भवति। सः स्वस्य रक्षणार्थं जलाशयं प्रविशति। मूषकस्य पादे रज्जुः बद्धा एव अस्ति इति तस्य विस्मरणं भवति। अतः मण्डूकेन सह मूषकः अपि जलाशयं प्रविशति। जले सः मूषकः मृतः भवति। तदनन्तरं मूषकः जलस्य उपरि प्लवितः भवति। श्येनः मूषकं गृह्णाति, उड्डयनं च करोति। परन्तु मूषकेण सह मण्डूकम् अपि श्येनः नयति। यतो हि रज्ज्वोः अपरः भागः मण्डूकस्य पादे बद्धः आसीत्। तेन मण्डूकः अपि मृतः भवति ।

आशयः – **मूर्खेण सह मैत्री कदापि न करणीया ।**

■ **विमलेशः**
प्रतापगढः, उत्तरप्रदेशः

# सन्तोषः परमं सुखम्

कश्चन धनिकः अस्ति। तस्य गृहम् अतिविशालम् अस्ति। तस्य ऐश्वर्यम् अपि महत्। किन्तु सुखं नास्ति अतः सः सर्वदा चिन्तामग्नः भवति। तस्य गृहस्य समीपे एव कस्यचित् निर्धनस्य कुटीरम् अस्ति। तत् अतीव जीर्णम्। निर्धनस्य गृहे धनं अपि नास्ति। प्रतिदिनं भोजनम् अपि नास्ति। तथापि सः सन्तोषेण गायति। एतत् सर्वं धनिकः पश्यति। अनन्तरं सः निर्धनं पृच्छति – "भवतः समीपे धनं नास्ति। भोजनं नास्ति। तथापि सन्तोषः अस्ति। मम समीपे तु धनम् अस्ति। ऐश्वर्यम् अपि अस्ति। तथापि मम सन्तोषः नास्ति। एतत् किमर्थम् ?" इति।

तदा निर्धनः वदति – "महोदय ! एषः वसन्तकालः। सर्वत्र सौन्दर्यम्। अहं एतत् सर्वं पश्यामि। तेन मम आनन्दः भवति। अतः अहं सन्तोषेण गायामि। यत् अस्ति तत् अहं पश्यामि। परं भवान् तु यत् नास्ति तत् सर्वं पश्यति। अतः सर्वदा चिन्तां करोति" इति।

**कोमला,**
अष्टमीकक्ष्या, बिहारम्

## शब्दक्रीडा

**उपरिष्टात् अधः**

– मातुः भ्राता किं कथ्यते ?
– श्रीरामस्य पत्नी का ?
– विद्यायाः देवी ।
– नेत्राभ्यां निस्सरति।
– लिङ्गमस्ति किन्तु न पुरुषः, न तु स्त्री ।

**वामतः दक्षिणम्**

– म्याउँ म्याउँ कः करोति ?
– ओषधिः वृक्षः एषः।
– रसं गृह्णाति।
– जन्मदात्री एषा।
– धनस्य पर्यायः।

| | | | | | |
|---|---|---|---|---|---|
| मा | र्जा | रः | | | |
| तु | ल | सी | | अ | |
| लः | | ता | | श्रु | |
| ज | न | नी | र | स | ना |
| | पुं | ल | क्ष्मीः | र | |
| | स | | | स्व | |
| | कम् | | | ती | |

**मोहितकुमारः**
मैनपुरी, उत्तरप्रदेशः

# आम्लं द्राक्षाफलम्

एकः श्रृगालः
एकः श्रृगालः वनं गच्छति।
पिपासा, तस्य बुभुक्षा
पिपासया बुभुक्षया च सः वनं गच्छति
सः वनं गच्छति, सः वनं गच्छति।

तत्र गच्छति, किमपि न लभते
इतोऽपि गच्छति, किमपि न लभते
सः, श्रान्तः जायते, खिन्नः जायते
किं च करोति ? सः किं च करोति ?

वामतः पश्यति, दक्षिणतः पश्यति
अग्रतः पश्यति, पृष्ठतः पश्यति
स्वेदः जायते, तृषा जायते
तस्य, स्वेदः जायते तृषा जायते
किं च पश्यति ? सः किं च पश्यति ?

पश्यति द्राक्षालतां
सः पश्यति द्राक्षाफलम्
उपरि उपरि लतासु दृश्यते च तत्फलम्
अनुक्षणं तन्मुखे रसः जायते
किं च करोति ? सः किं च करोति ?

एकवारम् उत्पतति, द्विवारम् उत्पतति
त्रिवारम् उत्पतति पुनः पुनः उत्पतति।
स्वेदः जायते तस्य श्रमः जायते
किं कथयति ? सः किं कथयति ?

आम्लं द्राक्षाफलम्
आम्लं द्राक्षाफलम्
इत्येवं कथयति, पलायते
इत्येवं कथयति पलाऽऽयते ।।

डा. नारायणभट्टः
*(शिशुसंस्कृतम्–गीतपुस्तकात् साभारम्)*

# प्रश्नोत्तरी

अत्र प्रतिमासं दश प्रश्नाः भवन्ति। प्रत्येकं प्रश्नस्य चत्वारः विकल्पाः उत्तररूपेण भवन्ति। किमपि एकस्य उत्तरस्य चयनं करोतु। सर्वाणि उत्तराणि एतस्याः पत्रिकायाः अन्तः प्रदत्तानि सन्ति। प्रथमं स्वयं उत्तरं चिन्तयतु। अनन्तरं पुनः उत्तरं शुद्धम् अथवा अशुद्धम् इति मेलयतु।

१. कति वेदाः सन्ति ?

(अ) त्रयः (इ) चत्वारः
(उ) पञ्च (ऋ) अष्ट

२. श्रीमद्भगवद्गीतायां कति श्लोकाः सन्ति ?

(अ) १०० (इ) ५००
(उ) ७०० (ऋ) १०००

३. उत्तरप्रदेशराज्ये कति जनपदाः सन्ति ?

(अ) पञ्चाशत् (५०) (इ) शतम् (१००)
(उ) सप्ततिः (७०) (ऋ) पञ्चसप्ततिः (७५)

४. भारतस्य वर्तमानराष्ट्रपतिः कः ?

(अ) प्रणवमुखर्जी (इ) राजनाथसिंहः
(उ) नरेन्द्रमोदी (ऋ) रामनाथकोविन्दः

५. रामायणस्य लेखकः कः ?

(अ) व्यासः (इ) कालिदासः
(उ) वाल्मीकिः (ऋ) तुलसीदासः

६. प्रयागराजे नदीनां सङ्गमः भवति ?

(अ) वेदिका, कावेरी, नर्मदा
(इ) गङ्गा, यमुना, सरस्वती
(उ) अलकनन्दा, वेत्रवती, गोदावरी
(ऋ) कावेरी, सरयू , गोमती

७. भारते कुत्र-कुत्र कुम्भमेला आयोज्यते ?

(अ) अयोध्यायाम्, प्रयागराजे च
(इ) नासिके, ऋषिकेशे च
(उ) जगन्नाथपुर्याम्, वृन्दावने च
(ऋ) हरिद्वारे, प्रयागराजे, नासिके, उज्जयिन्यां च

८. भारतस्य कयोः राज्ययोः द्वितीया राजभाषा संस्कृतम् अस्ति ?

(अ) उत्तरप्रदेशस्य, कर्णाटकस्य च
(आ) उत्तराखण्डस्य, हिमाचलप्रदेशस्य
(इ) पञ्जाबस्य, हरियाणायाः च
(ई) बिहारस्य, देहल्याः च

९. कति संस्काराः भवन्ति ?

(अ) दश (इ) विंशतिः
(उ) षोडश (ऋ) चतुर्दश

१०. वेदानां, पुराणानाम्, उपनिषदां च भाषा का ?

अ. हिन्दीभाषा आ. संस्कृतभाषा
इ. तमिलभाषा ई. प्राकृतभाषा

**चण्डीप्रसादभट्टः**
शृङ्गेरी, कर्णाटकम्

## ग्रहमन्त्रालयाधीनः पतिः

नूतनः छात्रः विद्यालयं प्रविशति। अध्यापिका आदौ तस्य परिचयादिकं जानाति।

तदनन्तरं–

शिक्षिका – तव जनकः किं करोति ?

छात्रः – अम्बा यद्यद् वदति तत् सर्वम् इति।

# कुम्भपर्व

कु अधुना कुम्भमेला प्रयागराजे भवति। एषा मेला भारतवर्षे अतीव प्रसिद्धा। एषा इदानीं तु सम्पूर्णविश्वस्य एव पावनं पर्व अस्ति। यतः एतत् आयोजनं विश्वस्य सर्वाधिकं विशालं धार्मिकं, सांस्कृतिकं च आयोजनम् अस्ति।

कुम्भ–शब्दस्य अर्थः – 'कलशः' इति। अस्मिन् सन्दर्भे अनेकाः पौराणिककथाः प्रचलिताः सन्ति। तत्र सर्वाधिका प्रसिद्धा कथा अस्ति – देव–दानवानां समुद्रमथनम्। देवानां, दानवानां च मध्ये परस्परं १२ दिनानि यावत् अमृतपानार्थं युद्धम् जातम्। अतः एव कुम्भपर्व १२ प्रकारकाणि भवन्ति। पृथिवीलोके, देवलोके च क्रमशः ४, ८ इति प्रकारेण कुम्भपर्वाणि भवन्ति इति मान्यता अपि अस्ति।

युद्धसमये मदराचलपर्वतस्य, वासुकिनागस्य च साहाय्येन देवानां, दानवानां च माध्यमेन क्षीरसागरस्य मथनं जातम्। ततः १४ रत्नानां प्राप्तिः जाता। यत्र अमृतकलशः अपि आसीत्। सर्वे अमराः भवितुम् इच्छन्ति स्म। अतः तदा तत्र अमृतपानस्य इच्छया पुनः परस्परं देवानां दानवानां च कलहः जातः। अनन्तरं भगवान् विष्णुः मोहिनीरूपधारणं कृत्वा बुद्धिपूर्वकं अमृतस्य वितरणं करोति। चतुराः देवाः इन्द्रपुत्रस्य जयन्तस्य माध्यमेन अमृतकलशं अन्यत्र प्रेषयन्ति। पुनः दानवाः अमृतप्राप्तिनिमित्तं जयन्तस्य पृष्ठतः धावन्ति। तदा यत्र–यत्र अमृतबिन्दवः पतिताः तत्र–तत्र द्वादशवर्षेषु कुम्भमेलायाः आयोजनं भवति। एतत् आयोजनं हरिद्वारे, प्रयागराजे, नासिके, उज्जयिन्यां च भवति।

■ भट्टाचार्यः
न्यू-हैदराबाद, लखनऊ

# सङ्ख्यायाः अनुसारेण रेखां योजयतु।
# अनन्तरं वर्णं पूरयतु

101 102 103 1 2 3 4 5 6 7 8 9 10 11 12 13 14 15 16 17 18 19 20 21 22 23 24 25 26 27 28 29 30 31 32 33 34 35 36 37 38 39 40 41 42 43 44 45 46 47 48 49 50 51 52 53 54 55 56 57 58 59 60 61 62 63 64 65 66 67 68 69 70 71 72 73 74 75 76 77 78 79 80 81 82 83 84 85 86 87 88 89 90 91 92 93 94 95 96 97 98 99 100

## मातुलभयम्

कंसः मातुलः आसीत्।
शकुनिः अपि मातुलः एव।
"सैराट"चलच्चित्रे अपि मातुलः एव सर्वविनाशकारणम्।
"बाहुबली"चलच्चित्रे अपि मातुलः एव मृत्युकारणम्।
यदि एवम् अस्ति तर्हि अधुना बालकाः चिन्तयन्ति यत् अवकाशे मातुलगृहं गमिष्यामः उत न ?

# महान् वैज्ञानिकः आर्यभट्टः

आर्यभट्टः महान् वैज्ञानिकः, खगोलशास्त्री, गणितज्ञः च । एतस्य जन्म महाराष्ट्रे ४७६ खीस्ताब्दे जातम् । एषः उच्चशिक्षणार्थं पाटलिपुत्रस्थं कुसुमपुरविश्वविद्यालयं गतः। एतस्य ग्रन्थः आर्यभट्टीयम् इति नाम्ना प्रसिद्धः अस्ति । यत्र च अङ्कगणित–बीजगणित–रेखागणित–त्रिकोणमिति–इत्यादयः विषयाः सन्ति। शुल्वसूत्र–शङ्कुयन्त्र–छायायन्त्र–चक्रयन्त्र–इत्यादीनां विस्तारपूर्वकं वर्णमपि अत्र अस्ति । एषः "$\pi$" पाईमानस्य, शून्यस्य (0) च आविष्कर्ता। एतस्य प्रथमः शिष्यः भास्करः।

"पृथिव्याः आकृतिः वर्तुलाकारः नास्ति अपितु आमलकवत् अस्ति। एषा सर्वैः ग्रहैः सह स्वस्मिन् अक्षपरिधौ एव परिभ्रमति। एषा सूर्यस्य परिक्रमणं च करोति। किञ्च सूर्यप्रकाशमाध्यमेन एव सर्वे ग्रहाः, चन्द्रमा च प्रकाशिताः भवन्ति" – इत्यादयः अस्य एव प्रतिपादनविषयाः सन्ति । 'चन्द्रस्य छायाकारणेन सूर्यग्रहणं, चन्द्रग्रहणं वा खगोलीयघटना भवति' इति आर्यभट्टः वर्णनं करोति। 'भारतसर्वकारस्य प्रथमोपग्रहस्य नाम आर्यभट्टः इति सुप्रसिद्धम्। एषः ५५० तमे खीस्ताब्दे दिवङ्गतः। वयं सर्वे एतादृशं महावैज्ञानिकं सर्वदा सादरं स्मरामः ।

**रेणु जायसवाल**
गोमतीनगरम्, लखनऊ

# बालप्रकृतिः

बालमनः गङ्गाजलसमानं निर्मलं, पवित्रं च भवति। तत्र न तु रागः न वा द्वेषः भवति । यथा श्वेतकागदं, स्वच्छदर्पणः वा भवति तथा बालमनः अपि विशुद्धम् एव। बालस्य प्रत्येकमपि व्यवहारः सर्वेषां कृते आनन्ददायकः, प्रेरणादायकः च भवति। सर्वान् बहुकिमपि शिक्षयति अपि।

यदा बालः एकाग्रचित्तरूपेण प्रतिदिनं लोकव्यवहारं पश्यति तदा तस्य चिन्तनशक्तिः, कल्पनाशक्तिः च विकसिता भवति। शनैः शनैः तस्य बाल्यजीवनं सुविकसितं, ज्ञानसम्पन्नं च भवति। वातावरणप्रभावेण एव तस्य शारीरिकः मानसिकः, बौद्धिकः च विकासः सम्भवति।

यथा लतायाः विकासाय, वर्धनाय वा साहाय्यं, पोषणं च आवश्यकं तथैव बालस्य अपि जीवन–विकासाय यथोचितं वातावरणं, समीचीना शिक्षा च आवश्यकी। यतः बालजीवनम् एव मानवजीवनस्य आधारशिला भवति। यदि आधारशिला सुदृढा भवति तर्हि सम्पूर्णजीवनं तु स्वयमेव आदर्शमयं, सुदृढं च भविष्यति एव। अतः भारतीयपरम्परायाम् उत्सवाचरणम्, ईशःस्मरणम्, व्रताचरणादिकं च भवति येन बालप्रकृतिः स्वतः विकसिता भवति। सा च भारतीयसंस्कृतेः अनुरूपं सर्वेभ्यः सुसंस्कारयुक्ता, प्रेरणास्पदा, शिक्षाप्रदायिका, मार्गदर्शिका, आदर्शान्विता च भवति। तादृशस्य बालस्य राष्ट्रनिर्माणे महती भूमिका भवति, तदा स्वयमेव अस्माकं राष्ट्रमपि सुदृढं, सुरक्षितं च भविष्यति।

अत एव अस्माकम् आचार्याः वदति यत् –

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।।**

**विशालप्रसादभट्टः**
रुद्रप्रयागः, उत्तराखण्डः

# सरस्वतीपूजा

पौराणिकमान्यतानुसारं ऋतुराजवसन्तसमये माघमासस्य शुक्लपक्षस्य पञ्चम्यां तिथौ वयं भारतीयाः वागदेव्याः सरस्वतीमातुः पूजनं कुर्मः। एषा ब्रह्मदेवस्य मानसपुत्री, विद्यायाः अधिष्ठात्री देवी च मन्यते। वाग्देवी, भारती, शारदा, वागीश्वरी, श्वेताम्बरा, पद्मासना, वीणापाणि– इत्यादीनि बहूनि पर्याय–नामानि अस्याः सन्ति।

प्राचीनकाले कालिदास–वरदराजाचार्यादयः विद्वांसः अपि वाग्देव्याः आशीषा प्रसिद्धाः जाताः। अस्याः आशीषा मन्दमतयः अपि प्रवीणतां प्राप्नुवन्ति इति अस्माकं परमश्रद्धा।

अस्मिन् आधुनिके काले अपि अस्य पर्वणः कृते छात्राणां महती श्रद्धा पौनःपुन्येन दृश्यते। अतः एते छात्राः स्वस्य विद्यालये, महाविद्यालये, गृहेषु चापि मातुः वाग्देव्याः प्रतिमां शास्त्रोक्तविधिना प्रतिष्ठापयन्ति। तदर्थं मण्डपम् अलङ्कुर्वन्ति। तदनन्तरं सरस्वतीदेव्यै नैवेद्यरूपेण अर्पितानि फल–मिष्ठान्नादीनि च आगतेभ्यः सर्वेभ्यः श्रद्धालुभ्यः प्रसादरूपेण वितरन्ति। बहुत्र अधुनिकविद्यालये पूजादिवसे बालमेलायाः आयोजनम् अपि भवति। पूजनानन्तरम् अग्रिमदिने प्रतिमाविसर्जनम् अपि अतीव उत्साहेन कुर्वन्ति।

यथा अस्माकं देशः धार्मिकरूपेण समृद्धः, सम्पन्नः च अस्ति तथा विद्यायाः विषये अपि। अतः एव वदन्ति – "विद्याधनं सर्वधनप्रधानम्।" एषा विद्या एव ज्ञानस्य अपरं रूपम्। तदर्थं ज्ञानविषये भारतीय–जनानां सर्वत्र आदरः भवति।

■ **निरञ्जनकुमारदीक्षितः**
पश्चिमचम्पारणम्, बिहारम्

# वाग्व्यवहारः

## परस्परं परिचयः

(परस्पर परिचय)

| | | |
|---|---|---|
| नमस्ते | – | नमस्ते |
| मम नाम विशालः | – | मेरा नाम विशाल है। |
| भवतः (पुंलिङ्गे) नाम किम् ? | – | आपका (पुंलिंग) नाम क्या है? |
| भवत्याः (स्त्रीलिङ्गे) नाम किम् ? | – | आपका (स्त्रीलिङ्ग) नाम क्या है? |

## अन्येषां व्यक्तीनां वस्तूनां वा परिचयः

(अन्य व्यक्ति या वस्तुओं का परिचय)

| | | |
|---|---|---|
| सः (पुं०) कः ? | – | वह (कौन) है ? |
| सा (स्त्री०) का ? | – | वह (स्त्री०) कौन है ? |
| सा माता | – | वह माता है।/ वे माताजी हैं ? |
| तत् (नपुं०) किम् ? | – | वह (नपुं०) क्या है ? |
| तत् वाहनम्। | – | वह गाड़ी है। |
| अयं (पुं०) कः ? | – | यह (पुं०) कौन है ? |
| अयम् अग्रजः। | – | यह बड़ा भाई है। |
| इयं (स्त्री०) का ? | – | यह (स्त्री०) कौन है ? |
| इयम् अग्रजा । | – | यह बड़ी बहन है। |
| इदं (नपुं०) किम् ? | – | यह (नपुं०) क्या है ? |

**उत्तराणि** – १) इ (चत्वारि); २) ऋ (७००); ३) ऋ (पञ्चसप्ततिः); ४) ऋ (रामनाथकोविन्दः); ५) उ (वाल्मिकिः); ६) इ (गङ्गा, यमुना, सरस्वती); ७) ऋ (हरिद्वारे, प्रयागराजे, नासिके, उज्जयिन्यां च); ८) आ (पञ्जाबस्य, हिमाचलप्रदेशस्य च); ९) उ (षोडश); १०) आ (संस्कृतभाषा)।

## पदपरिचयः

### सम्बन्धवाचकशब्दाः

| | | |
|---|---|---|
| पितामहः | – | दादा |
| पितामही | – | दादी |
| मातामहः | – | नाना |
| मातामही | – | नानी |
| पितृव्यः | – | चाचा |
| पितृव्या | – | चाची |
| मातुलः | – | मामा |
| मातुलानी | – | मामी |
| पुत्रः | – | बेटा |
| पुत्री | – | बेटी |
| भ्राता | – | भाई |
| भगिनी | – | बहन |
| अनुज | – | छोटा भाई |
| अनुजा | – | छोटी बहन |

## चित्रपतङ्गे अनेकान् वर्णान् पूरयतु

# कुतः शिक्षारम्भः ?

प्रश्नाः सम्भवन्ति चेत् उत्तराणि अपि भवन्ति एव। शिक्षारम्भः कदा ? सा का ? कीदृशी च ? इति प्रश्नस्य उत्तरं सहजम् अस्ति यत् शिक्षारम्भः तु बालस्य दुग्धपानात् पूर्वमेव भवति। गर्भाधानात् पूर्वमेव माता, पिता च सन्तानविषये यादृशं सङ्कल्पं करोति तादृशं एव परिमाणं धारयित्वा सन्तानस्य उत्पत्तिः भवति।

मुखं शिशुना देवदत्तं लब्धम्। बुभुक्षा अपि देवदत्ता लब्धा। किन्तु बुभुक्षा निवारणं केन प्रकारेण करणीयम् इति शिशोः स्पष्टा कल्पना न भवति। शिशुः प्रयत्नपूर्वकं केवलं रोदनं करोति। ततः जननी एव महत्या प्रीत्या नवाजातं शिशुं दुग्धपानं शिक्षयति। यद्यपि ततः पूर्वमपि शिशोः बहु किमपि दैवदत्तं शिक्षणं प्रचलति एव। तदनन्तरं व्यवस्थया, अव्यवस्थया वा मातृभाषया, परिवेशभाषया वा बालशिक्षायाः शनैः शनैः विकासः भवति। या व्यवस्थया भवति सा तु लोके स्वयं प्रचलति किन्तु एतया शिक्षया परिवेशिकः ग्राम्यः वा सन्तोषः भवति। एतस्य सर्वस्य शैक्षणिकविस्तारं तु शिक्षाविशेषज्ञाः एव कुर्वन्ति।

यतः शिक्षाविशेषज्ञानां विशाला दृष्टिः, महत् हितचिन्तनं च भवति अतः ते विशेषरूपेण चिन्तयन्ति यत् शिक्षायाः विकासः बाल्यकालात् एव कथं भविष्यति? युक्ति–रीति–नीति–उपाय–आदि–माध्यमेन ते शिक्षाविषयं विचारयन्ति, योजयन्ति, प्रवर्तयन्ति च। अबोधाः बालाः अपि कथं बोधनीयाः, प्रेरणीयाः, प्रसादनीयाः, उत्साहनीयाः चेति अनेकान् दूरूहविषयान् बालशिक्षाविषये विचारयन्ति। यतः सर्वेषां हितं कल्याणं वा ते आरम्भे एव चिन्तयन्ति।

एतादृशाः बहवः बालशिक्षाविशेषज्ञाः देशे, विदेशे च यथास्थिति बहु कार्यं कृतवन्तः। भारते वैदिक–आयुर्वेद–ग्रन्थेषु काश्यपसंहिताकारः महर्षिकश्यपः 'कौमारभृत्यम्' नामक–ग्रन्थे अनेक–बालोपयोगिविषयानां वर्णनं करोति। यद्यपि एतस्य विस्तृतः परिचयःन लभ्यते तथापि ग्रन्थदर्शनेन ज्ञानं भवति यत् बालशिक्षा, बालचिकित्सा, बालक्रीडा, बालमनोविज्ञानम् – इत्यादिविषये आचार्यकश्यपः दृष्टिसम्पन्नः एव। यथा कश्यपसदृशाः भारतीयाः आचार्याः बालशिक्षाविशेषज्ञाः तथा अनेके बहवः वैदेशिकाः अपि सन्ति। तेषां विषये ज्ञानम्, परिचयः, अनुकरणम्, अनुगमनं च आवश्यकम्, अतः एतादृशानां बालशिक्षाविशेषज्ञानां विषये प्रत्यङ्कं वयं ज्ञास्यामः।

(अनुवर्तते)

**धनञ्जयशास्त्री**
आचार्यः, गुरुविरजानन्दसंस्कृतकुलम्

# सकारात्मकं चिन्तनम्

एकदा एकत्र द्वौ भ्रातरौ क्रीडन्तौ आस्ताम्। एकस्य नाम सतीशः, द्वितीयस्य अजयः। सतीशः ज्येष्ठः अजयः कनिष्ठः च। क्रीडायां संलग्नौ द्वौ अपि अग्रे धावनं कृतवन्तौ। मार्गे एकः कूपः आसीत्। तं परितः कोऽपि नासीत। तस्मात् कारणात् अग्रे धावन् सतीशः कूपे पतितवान्। पृष्ठतः अजयः एवं सर्वं दृष्ट्वा अतीव खिन्नः, सः उच्चैः उच्चैः चीत्कारं करोति। किन्तु तत्र कोऽपि तस्य चीत्कारं न श्रुतवान् सः पुरतः पश्यति, पृष्ठतः पश्यति, दक्षिणतः पश्यति, वामतः पश्यति, किन्तु साहायार्थं कश्चिदपि न दृश्यते। सः मनसि चिन्तयति यत् मया एव कथञ्चित् साधनीयम् अपि। तस्य एकत्र दृष्टिः पतति। तत्र एका रज्जुः, एका द्रोणी च बद्धा अस्ति। सः धावनं कृत्वा रज्ज्वा बद्धां दोणीम् अनीय सः कूपे पातयति। कथञ्चित् सः ज्येष्ठं भ्रातरं कूपात् बहिः निष्कासयति एव। तस्य भ्राता रक्षितः। सः ग्रामं गत्वा वदति। अद्य मम 8 वर्षीयेन भ्रात्रा द्वारा मम प्राणाः रक्षिताः। यदा ग्रामजनाः पृच्छन्ति तदा सः सम्पूर्णां कथां श्रावयति। एकः बालकः मध्ये एव स्थगयन् वदति यत् भवान् तु द्वादश वर्षीयः, भवतः तु भारः अधिकः। अतः भवान् असत्यं वदतीति। ग्रामे सर्वत्र ये श्रुतवन्तः

तेषु कोऽपि विश्वासं न कृतवन्तः। किन्तु ग्रामे विद्यमानः एकः वृद्धः हरकेशः एतत् सर्वं ज्ञात्वा ग्रामजनान् बोधितवान् यत् सर्वथा यदि कस्यापि पूर्णलक्ष्यस्योपरि दृष्टिः स्यात्। कोऽपि एवं वक्ता न स्यात् यत् त्वया न शक्यते। तस्य बालकस्य मनसि एकमेव लक्ष्यम् आसीत् यत् मम भ्राता कथञ्चित् अपि बहिः आगच्छेत् तत्र कोऽपि एवं वक्ता नासीत् यत् भवान् लघु, बलेन अल्पः, भवान् न साधयितुं शक्नोति। मया साधनीयमेव एकमेव लक्ष्यं निधाय तेन सम्पूर्णा शक्तिः तत्र स्थापिता आसीत्। अतः सः साफल्यं प्राप्तवान्। एवं श्रुत्वा ग्रामवासिनः तस्य बालकाय प्रोत्साहनं कर्तुं विविधपुरस्कारान् दत्तवन्तः।

जीवने सकारात्कचिन्तनेन सह ये अग्रे गच्छन्ति ते निश्चयेन सफलाः भवन्ति। कदापि कुत्रापि कस्मैचित् अपि न वक्तव्यं यत् भवान् न शक्नोति इति।

**सतीशशर्मा**
बरेली, उत्तरप्रदेशः

## मार्गे वार्तालापः

**(रास्ते में बातचीत)**

| | |
|---|---|
| नमस्ते मित्र ! नमस्ते सखि! | – नमस्ते मित्र, नमस्ते सखी । |
| सर्वं कुशलं खलु। | – सब कुशल है न। |
| आम् , सर्वं कुशलं वर्तते। | – हाँ , सब कुशल है। |
| बहूनि दिनानि जातानि, मेलनम् एव न जातम्। | – बहुत दिन हो गये, मिलना ही नहीं हुआ। |
| अद्यत्वे किं करोति ? | – आजकल क्या कर रहे हैं ? |
| अहम् आपणिकः अस्मि। | – मैं दुकानदार हूँ। |
| अहं व्यापारं करोमि। | – मैं व्यापार करता हूँ। |
| भवतः पुत्रः किं करोति? | – आपका बेटा क्या करता है ? |
| सम्प्रति मम पुत्रः अध्ययनं करोति। | – अभी मेरा बेटा अध्ययन करता है। |
| भवान् कुत्र गच्छति ? | – आप कहाँ जाते हैं ? |
| अहं भ्रमणार्थम् उद्यानं गच्छामि। | – मैं घूमने के लिए बगीचे में जा रहा हूँ। |
| इदानीं कः समयः ? | – अब क्या बजा है? |
| इदानीं षड्वादनम्। | – अभी छह बजे हैं। |
| मम अन्यत् कार्यम् अस्ति। | – मेरा दूसरा काम है। |
| अहं गच्छामि । | – मै जाता हूँ । |

**अंशुगुप्ता**
सीतापुरम्, उत्तरप्रदेशः

# परस्परं मैत्री रक्षणीया

कश्चन जन्तुपालकः। तस्य गृहे द्वौ मूषकौ वसतः। तयोः द्वयोः परस्परं स्नेहभावः अत्यधिकः आसीत्। अतः सर्वदा अपि एकत्र भवतः। एकवारं तयोः उपरि कश्चन विडालः आक्रमणं कृतवान् । तस्मिन् एव समये तयोः एकः मूषकः शीघ्रमेव विडालं प्रति आक्रमणं कृतवान् । तेन सः रक्षितः मुक्तः च । पुनः द्वौ अपि मूषकौ सम्मिल्य आक्रमणं कृतवन्तौ। तदा तु सः विडालः पलायितः किन्तु तेन अनन्तरं चिन्तितं यत् पुनः कथं सफलः भविष्यामि ? इति ।

ततः परं विचिन्त्य सः मित्रम् इव ताभ्यां सह प्रतिदिनं स्वस्य व्यवहारस्य प्रदर्शनम् आरब्धवान् । एकदा एकः मूषकः एकत्र शयानः आसीत् । एषः तस्य समीपं गत्वा मौनम् उपविष्टवान् । तेन तत्र किमपि न कृतम् । एतत् दृष्ट्वा द्वितीयस्य मूषकस्य महत् आश्चर्यं जातम्। कतिपयदिनानन्तरं एकदा सः विडालः द्वितीयस्य मूषकस्य समीपं गत्वा तथैव अभिनयं कृतवान्। अनन्तरं प्रथमस्य मूषकस्य समीपम् आगत्य वदति यत् "अहं तु किञ्चिदेव खादामि, किन्तु सः तु मम अपेक्षया अधिकं खादति । प्रतिदिनं मम अपि भोजनं समापयति। एवमेव सः विडालः अपरस्य कृते अपि तथैव उक्तवान् । सम्प्रति द्वयोः परस्परं शङ्का उत्पन्ना । एवं द्वौ अपि परस्परं शङ्कया पश्यतः । भोजनसमये अपि "अहं पूर्वं खादामि" इति भावनया परस्परं पश्यतः। अनेन कारणेन एव एकदा विडालः अवसरं सम्प्राप्य एकं मूषकं मारितवान् । तथैव अनन्तरं काले द्वितीयम् अपि।

**आशयः** – अतः अस्माभिः कदापि कस्यचित् कथनेन अपरस्मिन् विश्वासः न करणीयः। परस्परं स्नेहभावः रक्षणीयः एव।

**पूजा शर्मा**
बरेली, उत्तरप्रदेशः

## अक्षरैः संस्कृतशब्दनिर्माणं करोतु–

**यथा– च→चटका, क→कमलम्**

Scanned by CamScanner

अत्र चित्रद्वयम् अस्ति। चित्रद्वये समानता नास्ति। कः भेदः अस्ति इति ध्यानपूर्वकं पश्यतु, जानातु च।

कुक्कुटी कुक्कुटशावकं प्रति गच्छति। भवान्/भवती तस्याः गमनमार्गस्य अन्वेषणं करोतु।

# उत्तरप्रदेशसंस्कृतसंस्थानम्, लखनऊ

"उत्तर प्रदेश के हर विद्यालय में, चाहे वह किसी भी माध्यम का विद्यालय हो, किसी भी बोर्ड का विद्यालय हो वहां पर छात्र सामान्य संस्कृत सम्भाषण में बोलते हुए दिखाई दें।"

माननीयः मुख्यमन्त्री
योगी आदित्यनाथः

## २०१८ तमवर्षस्य उपलब्धयः

### उद्देश्यम्

संस्कृत-पालि-प्राकृत-भाषाणां संरक्षणं, संवर्धनं, प्रचारः, प्रसारश्च

### गतिविधयः

पुरस्कार-पुस्तकप्रकाशन-व्याख्यानगोष्ठी-कार्यशाला-वाल्मीकिजयन्ती-सरलसंस्कृतसम्भाषण प्रशिक्षणादयः

### सरलसंस्कृतसम्भाषणशिविरयोजना

६५ जनपदेषु सरलसंस्कृतसम्भाषणशिविराणां संचालनम्
६८८ संस्कृतसम्भाषणप्रशिक्षकाणां प्रशिक्षणम्
११,००० जनानां सरलसंस्कृतसम्भाषणप्रशिक्षणम्
सम्प्रति ४३ संस्कृतमहाविद्यालयेषु पंचदशदिवसीयसंस्कृतवाग्व्यवहारकार्यशालामाध्यमेन ७१ संस्कृतप्रशिक्षकैः २३८२ संस्कृतच्छात्राणां सरलसंस्कृतसम्भाषणप्रि

### संस्कृतस्य प्रोत्साहनाय प्रदीयमानाः पुरस्काराः

| पुरस्कारनाम | सङ्ख्या | राशिः |
|---|---|---|
| विश्वभारती पुरस्कारः | एकम् | रु. ५,०१,०००/- |
| महर्षिवाल्मीकिपुरस्कारः | एकम् | रु. २,०१,०००/- |
| महर्षिव्यासपुरस्कारः | एकम् | रु. १,०१,०००/- |
| महर्षिनारदपुरस्कारः | एकम् | रु. १,०१,०००/- |
| विशिष्टपुरस्काराः | पंच | रु. १,०१,०००/- |
| नामितपुरस्काराः | पंच | रु. ५१,०००/ - |
| वेदपण्डितपुरस्काराः | दश | रु. ५१,०००/ - |
| विशेषपुरस्काराः | षड् | रु. २१,०००/ - |
| विविधपुरस्काराः | विंशतिः | रु. ११,०००/ - प्रत्येकम् |

डॉ.वाचस्पतिमिश्रः
अध्यक्षः

हरिबक्शसिंहः
निदेशकः

